श्रीसर्वदेवसूरिविरचिता

# प्रमाणमञ्जरी ।

तैलङ्ग-इत्युपाह्वरामकृष्णात्मज-मङ्गेशशर्मणा
सुपरिष्कृता ।

सा च

मुम्बय्यां
पाण्डुरङ्ग जावजी इत्येतैः,
स्वीये निर्णयसागराख्यमुद्रणालये मुद्रापयित्वा
प्राकाश्यं नीता ।

शाक १८५९, सन १९३७

मूल्यं २ आणकद्वयम् ।

# प्रस्तावना ।

अथेदमद्ययावदमुद्रितं प्रमाणमञ्जरीनामकं वैशेषिकशास्त्रविषयकं लघुप्रकरणं जिज्ञासुजनोपयोगार्थं प्रकाश्यते । अल्पशरीरोऽप्ययं ग्रन्थो युक्तिप्राचुर्याद्विबुधमान्यः स्यादित्याशास्महे । अस्मिन् प्रकरणे वैशेषिकशास्त्रसंमतद्रव्यादिसमस्तपदार्थसमर्थनार्थं नानानुमानानि समुपन्यस्तानीति व्यक्तं भवेत पाठकानाम् ।

अस्याः प्रमाणमञ्जर्याः प्रणेता सर्वदेवाख्यः पण्डित इति ग्रन्थस्थपुष्पिकातोऽवगम्यते । परन्तु पण्डितोऽयं कस्मिन् काले क देशं स्वजन्मनालंचकारेत्यादि तद्वृत्तं बहूनां पुरातनग्रन्थकर्तृणामिव किमपि नोपलभ्यते । तथाप्यस्य कालनिर्णयार्थं काञ्चिद्युक्तिं पुरस्कुर्मः ।

खिस्तवर्षीयद्वादशशतकस्थश्रीचित्सुखाचार्यैः प्रणीतोऽद्वैततत्त्वप्रदीपिकाख्यश्चित्सुख्यपरनाम्ना प्रसिद्धः प्रबन्धोऽस्तीति नापरिचितमिदं वेदान्तादिशास्त्रपारगतानां विदुषाम् । तदुपरि श्रीपरमहंसप्रत्यग्रूपभगवद्भिरचिता नयनप्रसादिनीनाम्नी व्याख्या विराजते । तस्यां व्याख्यायां प्रमाणमञ्जरीगतं "गुणः कार्यव्यावृत्तजातिमान् कार्यत्वात् तुरगवत्" ( प्र. म. पृ. १५ पं. ४ ) इत्यनुमानमनूद्य खण्डितं वर्तते ( नि. सा. मुद्रिता चि. पृ. १८३ पं. ९ ) । श्रीप्रत्यग्रूपभगवतः समयस्तु खिस्ताब्दीयपञ्चदशशतकम् १५०० इति केचिदाधुनिका इतिहासज्ञाः । अतः प्रकृतग्रन्थकारः सर्वदेवः खिस्तवर्षीयपञ्चदशशतकात्प्राक्तन इत्येव वक्तुं शक्यते नाधिकम् ।

प्रमाणमञ्जरीग्रन्थस्योपरि तिस्रष्टीका वर्तन्त इति पुण्यपत्तनस्थराजकीयपुस्तकालयसंबन्धिमुद्रितसूचीपत्रादवगम्यते । तास्वाद्या अद्वयानन्दकृता टिप्पणरूपा । द्वितीया बलभद्रकृता टीका । तृतीया भट्टवामनकृता व्याख्या इति । एता दुर्लभत्वान्नास्माभिः प्राप्ताः । तथापि मूलग्रन्थोऽतिप्राचीनः प्रौढो वैशेषिकवाङ्मयेऽतिहासोपकारकश्चेति समालोच्य प्रवृत्ता वयमस्य प्रकाशने इति ।

प्रकृतग्रन्थसंशोधनं नातिशुद्धादर्शपुस्तकद्वयमालम्ब्य संपादितमस्माभिः । तत्रैकं पुण्यपत्तनस्थराजकीयपुस्तकालयगतम् । द्वितीयं महिशूरनगरस्थराजकीयपुस्तकालयगतम् । तदुभयपुस्तकालयाधिकारिभ्यां कियत्कालं पुस्तकप्रदानेन अनुगृहीता वयमिति तयोरुपकृतिं भूयः स्मरामः इति निवेदयति

काशीपुरे
चैत्र व॥ ५ म्या
शा. शकाब्दाः १८५०

विद्वदनुचरः
मङ्गेश रामकृष्ण तेलङ्गः

# प्रमाणमञ्जरीग्रन्थस्य विषयानुक्रमणी ।



तार्किकचक्रचूडामणिसर्वदेवविरचिता

# प्रमाणमञ्जरी ।



कासारतीरसरसीरुहमाददानः
शुभ्रं भ्रमद्भ्रमरमध्यमिवेन्दुबिम्बम् ।
द्वैमातुरश्चिरतरं भवतः स पायात्
संजातनिर्मलजलप्रतिबद्धनर्मा ॥ १ ॥

अभिवन्द्य विधोरर्धधारिणं च कणव्रतम् ।
प्रमाणमञ्जरी सर्वदेवेन क्रियते मया ॥ २ ॥

अभिधेयः **पदार्थः**। स भावाभावभेदेन द्विधा । पूर्वो विधिविषयः । स षोढा–द्रव्यादिभेदेन । तत्र समवायिकारणं द्रव्यम् । तन्नवधा पृथिव्यादिभेदेन ॥

तत्र गन्धवती **पृथिवी** । सा द्वेधा-नित्यानित्यभेदेन । पूर्वा परमाणुरूपा । क्रियावान्नित्यः परमाणुरिति सामान्यलक्षणम् । परमाणुर्गन्धवान्पार्थिवः । उत्तरा द्वेधा–नित्यसमवेताऽन्यथा चेति ॥

पूर्वा द्व्यणुकम् । स्पर्शवन्नित्यसमवेतं द्व्यणुकमिति सामान्यलक्षणम् । गन्धवद्व्यणुकं पार्थिवद्व्यणुकम् । पृथिवीत्वं नित्यसमवेतवृत्ति घटपटवृत्तिजातित्वात्सत्तावत् । परमाणुद्व्यणुकयोः सिद्धिः ॥

उत्तरा त्रेधा–शरीरादिभेदेन । स्पर्शवदिन्द्रियसंयुक्तमेव भोग-

१ शर्वदे° इति पाठान्तरम् ।

साधनमन्त्यावयवि शरीरमिति सामान्यलक्षणम् । गन्धवच्छरीरं पार्थिवं शरीरम् । स्वसमवेतसुखदुःखान्यतरसाक्षात्कारो भोगः । तद्द्वेधा—योनिजायोनिजभेदेन । पूर्वमस्मदादीनां प्रत्यक्षसिद्धम् । उत्तरं द्वेधा—प्रकृष्टधर्मजमन्यथा चेति । पार्थिवाः परमाणवः पारम्पर्येण कदाचित्प्रकृष्टधर्मजायोनिजशरीरारम्भकास्पर्शवत्परमाणुत्वादुदकपरमाणुवदिति अयोनिजशरीरसिद्धिः । दुःखभूयस्त्वादधर्मजमुत्तरं शरीरं मशकादीनां प्रत्यक्षसिद्धं तस्यायोनिजत्वम् । यद्गुणमप्रत्यक्षं साक्षात्कारप्रतीतिसाधनमिन्द्रियमिति सामान्यलक्षणम् ॥

गन्धवदिन्द्रियं **घ्राणम्** । तत्र प्रमाणम्—पार्थिवाः परमाणवः पारंपर्येणेन्द्रियारम्भकाः स्पर्शवत्परमाणुत्वात्तेजःपरमाणुवदिति । स्पर्शवान शरीरेन्द्रियव्यतिरिक्तः कार्यजातो विषय इति सामान्यलक्षणम् । गन्धवान्विषयः पार्थिवो विषयः । स च इष्टकादिप्रत्यक्षसिद्धः । सा चतुर्दशगुणवती । एवमुत्तरत्र सामान्यलक्षणानुवृत्तौ पदान्तरानुगमनेन तत्तत्परमाण्वादीनां लक्षणानि भवन्ति ॥

**स्नेहवदम्भः** । नित्यमनित्यं चेति । पूर्वं परमाणुरूपम् । उत्तरं द्वेधा—नित्यसमवेतमन्यथा चेति । पूर्वं द्व्यणुकम् । अन्त्यं नित्यसमवेतवृत्ति सरित्समुद्रजातित्वात्सत्तावत् इति परमाणुद्व्यणुकयोः सिद्धिः । उत्तरं शरीरादिभेदेन त्रेधा । शरीरे प्रमाणम्—आप्याः परमाणवः पारम्पर्येण शरीरारम्भकाः, स्पर्शवत्परमाणुत्वात्पृथिवी परमाणुवदिति । तच्च शुक्रशोणितसन्निपातनिरपेक्षं आप्यकार्यत्वात्कनकादिवदिति । तत्प्रकृष्टादृष्टजम्, अयोनिजशरीरत्वान्मशकादिशरीरवत् । सुखभूयस्त्वान्नाधर्मजम् । स्नेहवदिन्द्रियं रसनम् । आप्याः परमाणवः पारम्पर्येणेन्द्रियारम्भकाः स्पर्शवत्परमाणुत्वात्तेजःपरमाणुवदिति । तत्र प्रमाणम्—उत्तरो विषयः, शरीरं समुद्रादिः । रूपादिचतुर्दशगुणवत् ॥

अगुरुत्वे सति रूपवत्तेजः । नित्यानित्यभेदाद्द्वेधा । आद्यं परमाणुः । उत्तरं द्वेधा–नित्यसमवेतमन्यथा चेति । आद्यं द्व्यणुकम् । तेजस्त्वं नित्यसमवेतवृत्ति दीपसुवर्णजातित्वात्सत्तावदिति परमाणुद्व्यणुकयोः सिद्धिः । नासिद्धं साधनम् । तेजस्त्वं सुवर्णवृत्ति दीपाणुजातित्वात्सत्तावदिति साधनात् । उत्तरं शरीरादिभेदेन त्रेधा । पूर्वत्र प्रमाणम्–तैजसाः परमाणवः पारम्पर्येण शरीरारम्भकाः स्पर्शवत्परमाणुत्वात् पृथिवीपरमाणुवदिति शरीरसिद्धिः । तदयोनिजमेव । तेजःकार्यत्वाद्दीपवदिति । नयनाख्येन्द्रिये प्रमाणम्–आलोकात्यन्ताभावे जायमानो रूपसाक्षात्कारस्तेजःकारणकः । रूपसाक्षात्कारत्वात् । सत्यालोके जायमानरूपसाक्षात्कारवत् । तद्गोलकस्थं नयनोन्मीलने सत्येवोपलभ्यते । आलोकाज्ञानं तम इत्याश्रयासिद्धिरिति चेन्न । विधिमुखेन स्वातन्त्र्येण कृष्णाकारेण बहीरूपवत्तया प्रतीतेः ॥

अत एव आलोकाभावस्तमः । आलोकाभावस्तमो न द्रव्यमिति वदतोऽपि मते आरोपितनीलरूपप्रतीतेः सत्त्वान्नाश्रयासिद्धिः[1] । न तमो द्रव्यम् । असत्येवालोके चक्षुषा प्रतीयमानत्वादालोकाभाववदिति प्रमाणोपपत्तेः । कृष्णरूपं तमो द्रव्यमिति वदतो मते रूपप्रतीतेः सत्त्वान्नाश्रयासिद्धिः । तदतिरिक्तो विषयो भौमादिरूपात्मकादशगुणवत् ॥

रूपासहचरितस्पर्शवान्वायुः । स नित्यानित्यभेदेन द्वेधा । पूर्वः परमाणुः । उत्तरो द्वेधा–नित्यसमवेतोऽन्यथा चेति । आद्यो द्व्यणुकम् । वायुत्वं नित्यसमवेतवृत्ति । स्पर्शवद्वृत्तत्वे सति द्रव्यत्वावान्तरजातित्वात् पृथिवीत्ववदिति परमाणुद्व्यणुकयोः सिद्धिः । उत्तरस्त्रेधा–शरीरादिभेदेन । वायवीयाः परमाणवः पारम्पर्येण शरीरा-

1 °द्धिः तमो न भावरूपम् । अस° इति मैसूरपुस्तके पाठः ।

रम्भकाः स्पर्शवत्परमाणुत्वात् तेजःपरमाणुवदिति शरीरसिद्धिः । तदयोनिजं वायुत्वात्त्वगिन्द्रियवदिति । वायवीयाः परमाणवः पारम्पर्येणेन्द्रियारम्भकाः स्पर्शवत्परमाणुत्वात् तेजःपरमाणुत्ववदिति त्वगिन्द्रियसिद्धिः । तदन्यो विषयः ॥

त्वगिन्द्रियमरूपिद्रव्यग्राहकम् । अरूपित्वे सति द्रव्यग्राहकेन्द्रियत्वात् मनोवत् । वायोः प्रत्यक्षत्वसिद्धिरिति चेन्न । मूर्तत्वे सति सर्वदा स्पर्शशून्यत्वस्योपाधित्वात् । विप्रतिपन्नो वायुरप्रत्यक्षः वायुत्वात् त्वगिन्द्रियवत् । स्पर्शादिनवगुणवान् ॥

शब्दवदाकाशम् । तत्र प्रमाणम्--शब्दोऽष्टद्रव्यातिरिक्तसमवेतः सत्त्वे सति श्रोत्रग्राह्यत्वात् शब्दवत् । विप्रतिपन्नाः शब्दाः श्रूयमाणशब्दाश्रयाश्रयाः शब्दत्वाच्छ्रूयमाणशब्दवत् । इति शब्दत्वं सिद्धम् । आकाशं नित्यमसमवेतभावत्वात् समवायवदिति नित्यत्व सिद्धम् । तदेवेन्द्रियं श्रोत्रं नाम । शब्दोपलब्धिर्भूतेन्द्रियकरणिका रूपशब्दयोरन्यतरसाक्षात्कारत्वाद्रूपसाक्षात्कारवत् इति परिशेषात्सिद्धम् । परिशेषस्तु विप्रतिपन्नाः शरीरतदवयवा नयनादयस्तद्ग्राहका न भवन्ति कार्यत्वात् घटवदिति । न कालादयस्तद्ग्राहका अजसयोगनिराकरणात् । शब्दादिषड्गुणकम् ॥

विवक्षितपरत्वासमवाय्याश्रयत्वे सति सर्वगतः कालः । विप्रतिपन्नं मनो विवक्षितपरत्वासमवाय्याश्रयसंयुक्तं द्रव्यत्वात् आत्मवदिति तत्र प्रमाणम् ॥

अनियतपरत्वासमवाय्याश्रयत्वे सति सर्वगता दिक् । विप्रतिपन्नं मनो नियतपरत्वासमवाय्याश्रयसंयुक्त द्रव्यत्वादात्मवदिति तत्र प्रमाणम् । मनसा असंयुक्तं मनः सर्वदा विशेषगुणरहितद्रव्यद्वयसंयुक्तं द्रव्यत्वादात्मवदिति दिक्कालयोः प्रमाणम् । अत्र द्रव्यद्वये

१ °त्वात् पृथिवीपर° पुण्य० पुस्तके ।

कल्पितेऽन्यत्र तेनैव व्यवहारसिद्धेः अनेककल्पनायां प्रमाणाभावः । दिक्कालौ द्रव्यत्वावान्तरजातिरहितौ बुद्ध्यनाधारत्वे सति सर्वगतत्वादाकाशवदिति एकत्वं सिद्धम् । विप्रतिपन्नं सर्वं कार्यं दिक्कालकार्यम्, कार्यत्वात्संप्रतिपन्नवदिति तयोः सर्वकार्यनिमित्तत्वम् । आकाशकालदिशः सर्वगता मनोव्यतिरिक्तत्वे सति अस्पर्शद्रव्यत्वादात्मवदिति सर्वगतत्वम् । सङ्ख्यादिपञ्चगुणवत्त्वं कालदिशोः ॥

बुद्ध्याश्रय **आत्मा** । स द्वेधा—ईशानीशभेदात् । पूर्वत्र प्रमाणम्—आत्मत्वं नित्यविशेषगुणवद्वृत्ति, आत्मजातित्वात्सत्तावदिति । ईशज्ञानं नित्यम्, अनन्तकार्यहेतुत्वात्कालवदिति । तज्ज्ञान नित्यम् । विप्रतिपन्नं सर्वकार्यं विवक्षितज्ञानजं कार्यत्वात्, सम्प्रतिपन्नवदिति अनन्तहेतुत्वं सिद्धम् । तज्ज्ञानमाश्रयव्यापि नित्यगुणत्वात्परमाणुरूपवदिति तज्ज्ञानस्याश्रयव्यापित्वं सिद्धम् । अत एव तदिच्छाप्रयत्नावपि आश्रयव्यापिनौ । उत्तरत्र प्रमाणम्- भोगः कचिदाश्रितो गुणत्वाद्रूपवदिति । न कार्याणि तद्वन्ति कार्यत्वाद्घटवदिति । न श्रोत्रादि तद्वत् करणत्वाद्दण्डवदिति । भोगो गुणः अनित्यत्वे सत्यचाक्षुषप्रत्यक्षत्वाद्गन्धवदिति हेतुसिद्धिः ॥

अस्मदाद्यात्मा द्रव्यत्वावान्तरजातिमान् चतुर्दशगुणवत्त्वादुदकवत् । आत्मशब्दोऽनेकवाचकः आत्मवाचकत्वात् तच्छब्दवदिति नानात्वम् । मच्छरीरेतरमूर्तानि मदात्मयुञ्जि मूर्तत्वान्मच्छरीरवदिति सर्वगतत्व तस्य । ईशोऽपि सर्वगतः आत्मत्वाद्देहिवत् । स नित्यः सर्वगतत्वात्कालवत् । स बुद्ध्यादिचतुर्दशगुणवान् ॥

मूर्तत्वे सति सर्वदा स्पर्शशून्यं **मनः** । सुखज्ञानमिन्द्रियजम्, अनित्यज्ञानत्वात् रूपज्ञानवदिति तत्र प्रमाणम् । मनोऽणु आत्मसंयोगित्वे

---

१ °असस्पर्श° इति ह्मसूरपुस्तकपाठ । २ °प्रयत्नौ आश्रयत्व° पुण्य० पुस्तकपाठ ।

सति निरवयवत्वात्परमाणुवदिति मूर्तत्वं तस्य सिद्धम् । अज-संयोगनिराकरणात् न सर्वगतेन व्यभिचारः । सङ्ख्याद्यष्टगुणकम् ॥

॥ इति प्रमाणमञ्जर्यां द्रव्यपदार्थ उक्तः ॥

कर्मान्यत्वे सति सामान्यैकाश्रयो **गुणः** । रूपादिभेदेन चतुर्विंशतिधा । नयनैकेन्द्रियग्राह्यजातिमद्रूपम् । रसनैकग्राह्यजातिमान् रसः । घ्राणैकग्राह्यजातिमान् गन्धः । स्पर्शनैकग्राह्यजातिमान् स्पर्शः । एते यावद्द्रव्यभाव्ययावद्द्रव्यभाविभेदाद्द्वेधा । पार्थिवपरमाणोरन्यत्र यावद्द्रव्यभाविनः । प्रत्यक्षतस्तथा सिद्धिः । द्व्यणुकादिषु रूपादयो यावद्द्रव्यभाविनः, कार्यरूपादित्वात् घटरूपादिवदिति । सलिलादिपरमाणुरूपादयो यावद्द्रव्यभाविनः सलिलादिरूपादित्वात् सम्प्रतिपन्नवदिति । पार्थिवपरमाणुष्वयावद्द्रव्यभाविनः । तत्र प्रमाणम्—पार्थिवपरमाणौ सति रूपादयो निवर्तन्तेऽनित्यत्वात्संप्रतिपन्नवदिति । पार्थिवं द्व्यणुकं अनित्यविशेषगुणवत्समवेतं पार्थिवकार्यत्वात् घटवदिति नासिद्धं साधनम् । हुतवहनिवहालीढे[1] हेमखण्डे पूर्वरूपाविलक्षणरूपादिदर्शनात्तत्रैव[2] तत्प्राकट्ये सति नातिप्रसङ्ग इति । तत्र पार्थिवपरमाणुरग्निसंयोगासमवायिकारणविशेषगुणवान् अनित्यविशेषगुणवत्त्वेऽपि नित्यभूतत्वात् आकाशवदिति पाकजत्वं तेषां सिद्धम् ॥

गुणत्वावान्तरजात्या द्व्यणुकपरिमाणाऽसमवायिकारणसजातीया **संख्या** । सा द्वेधा—अयावद्द्रव्यभावियावद्द्रव्यभाविभेदेन । पूर्वत्र प्रमाणम्—परिमाणत्वं संयोगातिरिक्तानेकद्रव्यासमवायिकारणवृत्ति परिमाणवृत्तिजातित्वात् सत्तावदिति । परमाणुपरिमाणं असमवायिकारणं न भवति, नित्यपरिमाणत्वात् आकाशपरिमाणवत् इति परपक्षव्युदासः । द्वित्वं अयावद्द्रव्यभावि अनेकद्रव्यगुणत्वात् संयोग-

---

१ °हुतवहालीढे° इति पु० पाठ.। २ °तत्रैव तथा कल्पने सति° पु० पुस्तकपाठ ।

वदिति । द्वित्वसामान्य बुद्धिजवृत्ति द्वित्वजातित्वात् सत्तावदिति । उत्तरत्र प्रमाणम्—संख्यात्वं यावद्द्रव्यभाविवृत्ति द्वित्वत्रित्वजातित्वात् सत्तावदिति । तदेवैकत्वं सख्या गुणः, सामान्यैकाश्रयत्वे सति अकर्मत्वात् रूपवदिति परपक्षव्युदासः । एवंभूतायाः संख्यायाः पदार्थान्तरत्वे स्वीकृते रूपमपि पदार्थान्तरं भवेत् ॥

गुणत्वावान्तरजात्या एकपृथक्त्वान्याऽप्रत्यक्षात्मगतयावद्द्रव्यभाविसजातीयं **परिमाणम्** । आत्मा पृथक्त्वान्याप्रत्यक्षयावद्द्रव्यभाविगुणवान् सर्वगतत्वात् दिग्वत् । सर्वं द्रव्यं परिमाणाधिकरणं द्रव्यत्वादात्मवदिति । तच्चतुर्विधम्—अणुमहद्दीर्घह्रस्वभेदात् । द्व्यणुकेऽणुत्वमङ्गीकृत्य ह्रस्वत्व निराकुर्वाणं प्रति इदमनुमानम्—द्व्यणुकं अणुपरिमाणातिरिक्तपरिमाणाधिकरणं कार्यद्रव्यत्वात् पटवदिति । दीर्घत्वमनङ्गीकुर्वाणं प्रति इदमनुमानम्—पटो महत्त्वव्यतिरिक्तपरिमाणाधिकरणं कार्यद्रव्यत्वात् द्व्यणुकवदिति ॥

सख्यातिरिक्तदिक्कालगतात्यन्तसजातीयं **पृथक्त्वम्** । तद्द्वेधा—अयावद्द्रव्यभावियावद्द्रव्यभाविभेदात् । तत्र प्रमाणम्—कालः सख्यातिरिक्तदिग्गतगुणवान् द्रव्यत्वात् पटवदिति अयावद्द्रव्यभाविपृथक्त्वसिद्धिः । पृथक्त्वसामान्यं अस्मदादिबुद्धिजवृत्ति पृथक्त्वजातित्वात् सत्तावदिति बुद्धिजत्वं सिद्धम् । तत्सामान्यं कारणगुणपूर्ववृत्ति पृथक्त्वजातित्वात् सत्तावदिति । तत्सामान्यं यावद्द्रव्यभाविवृत्ति द्विपृथक्त्वत्रिपृथक्त्वजातित्वात् सत्तावदिति एकपृथक्त्वसिद्धिः ॥

गुणत्वावान्तरजात्या द्रव्यासमवायिकारणसजातीयः **संयोगः** । तत्र प्रमाणम्—सयोगपदं सद्वाच्यं वाचकत्वात् स्वलक्षणपदवदिति परिशेषात् सयोगसिद्धिः । स त्रिविधः—अन्यतरकर्मजोभयकर्मजसंयोगजभेदात् । तत्रोभयं प्रसिद्धम् । तृतीये प्रमाणम्—संयोगत्वं संयो-

गासमवायिकारणवृत्ति संयोगवृत्तिजातित्वात् सत्तावदिति । विप्रतिपन्ना आत्मादय आकाशेन न संयुज्यन्ते सर्वगतत्वात् आकाशवदिति अजसंयोगनिरासः । अयावद्द्रव्यभावित्वं तस्य प्रत्यक्षसिद्धम् ॥

संयोगविरोधी गुणो **विभागः** । तत्र प्रमाणम्—आकाशः संयोगातिरिक्तकर्मजगुणाधारः द्रव्यत्वात् शरीरवदिति । विप्रतिपन्नं सर्वं द्रव्यं विभागवत् द्रव्यत्वात् आकाशवत् । स द्विविधः—कर्मजविभागजभेदात् । आद्यो द्वेधा अन्यतरकर्मजोभयकर्मजभेदात् । तत्र प्रमाणम्—विभागत्वं एकानेककर्मासमवायिकारणवृत्ति विभागजातित्वात् सत्तावदिति कर्मजविभागसिद्धिः । विभागत्वं अकर्मजवृत्ति विभागवृत्तिजातित्वात् सत्तावदिति विभागजविभागसिद्धिः परिशेषात् । विभागत्वं विभागासमवायिकारणवृत्ति विभागवृत्तिजातित्वात् सत्तावदिति प्रमाणम् ॥

परव्यवहारे यद्विशेषणतया निमित्तं तत्**परत्वम्** ॥

अपरव्यवहारे यद्विशेषणतया निमित्तं तद्**परत्वम्** । तत्र प्रमाणम्—घटोऽस्मदादिबुद्धिजैकद्रव्यजातीयवान् अनेकविशेषगुणसमवायिकारणत्वात् आत्मवत् । विप्रतिपन्नं परत्वादिसंयोगासमवायिकारणकम् अस्मदादिबुद्धिजैकद्रव्यत्वात् सुखादिवदिति परिशेषात् कालपिण्डसंयोगासमवायिकारणत्वं सिद्धमनयोः ॥

अर्थावग्रहो **बुद्धिः** । सा द्वेधा—नित्यानित्यभेदात् । पूर्वा भगवतो महेश्वरस्य । सा परीक्षिता आत्मप्रकरणे । उत्तरा अनीशानाम् मानसप्रत्यक्षसिद्धा ॥

सा द्वेधा—अविद्याविद्याभेदात् । बाधिता अविद्या । सा द्वेधा—निश्चयाऽनिश्चयभेदात् । तत्र पूर्वो विपर्ययः । तत्र प्रमाणम्—विवादा-

स्पदं रजतधीविषयः रजतेच्छुप्रवृत्तिविषयत्वात्[1] हट्टगतरजतवत् । उत्तरः संशयः । इदमाहोस्विन्नैवमिति व्यवहारो व्यवहार्यज्ञानपूर्वकः व्यवहारत्वात् संप्रतिपन्नवदिति प्रमाणम् । अनध्यवसायस्येहान्तर्भावः, स्वप्नस्य विपर्यये ॥

अबाधिता धीर्विद्या । सा द्वेधा–प्रमितिरन्यथा चेति । सम्यगनुभूतिः प्रमितिः । सा द्वेधा–प्रत्यक्षा इतरा चेति । तत्रापरोक्षा सा प्रत्यक्षा, परोक्षेतरा चेति । पूर्वा द्वेधा–प्रकृष्टधर्मजेतरभेदात् । पूर्वा योगिप्रत्यक्षा । तत्र प्रमाणम्–धर्मः कस्यचित्प्रत्यक्षः प्रमेयत्वात् वामोवदिति । यस्य प्रत्यक्षः स योगी । उत्तरा अस्मदादीनां प्रत्यक्षा ॥

सा प्रकारान्तरेण द्वेधा–सविकल्पकनिर्विकल्पकभेदात् । विशिष्टविषय प्रत्यक्षं सविकल्पकम् । तत्र प्रमाणम्–सविकल्पका बुद्धिः प्रत्यक्षा, स्मृतिव्यतिरिक्तत्वे सति अबाधितबुद्धित्वात् निर्विकल्पकवत् । वस्तुस्वरूपमात्रावभासो निर्विकल्पकम् । ज्ञानानां सविकल्पकत्वाद्दृष्टान्तासिद्धिरिति चेत् । न । प्रमाणोपपत्तेः । सर्वे विकल्पा ज्ञानव्यावृत्तजातिमन्तः जातिमत्त्वात् पटवत् ॥

उत्तरा लैङ्गिकी । लिङ्गं पुनः साध्याव्यभिचारित्वे सति पक्षधर्मतावत् । तद्द्वेधा भिद्यते–अन्वयव्यतिरेकभेदात् । यस्य साध्येन साहचर्यनियमस्तदन्वयि । तद्द्विधा–सति विपक्षेऽसति च । पूर्वमन्वयव्यतिरेकि । तद्यथा–निनदोऽनित्यः कृतकत्वात्, यदेवं तदेवं, यथा घटः तथा चेदं तस्मात्तथा । यत्पुनरनित्यं न भवति तत्पुनः कृतकमपि न भवति, यथाकाशम् । न चेदं न तथा, तस्मान्न च न तथा । उत्तरं केवलान्वयि, यथा स्थितिस्थापकः प्रत्यक्षः प्रमेयत्वात, यदेवं तदेवं, यथा पृथिवी, तथा च प्रकृतं, तस्मात्तथा । असति

---

[1] °त्वात् सत्यरजत° पु० पाठ. ।

मपक्षे यस्य साध्याभावेनाभावनियमस्तद्व्यतिरेकि । सर्वं कार्यं सर्ववित्कर्तृपूर्वकं कादाचित्कत्वात्, न यदेवं न तदेवम् । यथा परमाणुः । न चेदं न तथा, तस्मान्न तथेति ॥

लिङ्गलक्षणरहिता लिङ्गाभिमानविषया **लिङ्गाभासाः** । ते चासिद्धविरुद्धानैकान्तिकासाधारणबाधितविषयसत्प्रतिपक्षभेदात्षट्प्रकाराः । पक्षधर्मतयाऽज्ञातोऽसिद्धः । यथा शब्दो नित्यश्चाक्षुषत्वात् । पक्षविपक्षयोरेव वर्तमानो हेतुर्विरुद्धः । यथा शब्दोऽनित्यः श्रोत्रग्राह्यत्वात् । पक्षसपक्षविपक्षत्रयवृत्तिरनैकान्तिकः । यथा शब्दोऽनित्यः प्रमेयत्वात् । सपक्षविपक्षव्यावृत्तः पक्षे वर्तमानोऽसाधारणः । यथा पृथिवी नित्या गन्धवत्त्वात् । प्रमाणविरोधी बाधितविषयः कालात्ययापदिष्टः । अनुष्णोऽग्निः प्रमेयत्वात् । समबलविरुद्धहेतुद्वयसमावेशः सत्प्रतिपक्षः । यथा शब्दो नित्यः श्रोत्रग्राह्यत्वादित्युक्ते, न नित्यः सामान्यवत्त्वे सति अस्मदादिबाह्येन्द्रियग्राह्यत्वात् इति षोढा व्यूढः । शेषं भाष्ये । वाक्यात् वाक्यार्थधीः, असन्निहितविषये अभावधीः । असतो गेहे जीवतो बहिःसत्त्वबुद्धिरनुमितिः, प्रत्यक्षेतरप्रमितित्वात् संप्रतिपन्नवदिति । सन्निहितविषये अभावप्रमा प्रत्यक्षा अनुमित्यन्यप्रमात्वात् सप्रतिपन्नवदित्यन्तर्भावः । शेषं भाष्ये ॥

उत्तरा **स्मृतिः** । सा अप्रमा, स्वविषये प्रत्यक्षा अनुमित्यन्यप्रमात्वात् इति सिद्धा अविद्या ॥

यस्मिन्ननुभूयमाने तत्साधनेष्वनुषङ्गः तत्समवेते तत्साधनेष्वभिषङ्गः तत्**सुखम्** । यस्मिन्ननुभूयमाने च समवेते तत्साधनेषु द्वेषस्तद्दुःखम् । ते बुद्धिजे, तदन्वयव्यतिरेकानुविधायित्वात् । यदेवं तदेवं यथा घटस्तथा च प्रकृतम् । तस्मात्तथा ॥

१ °र्वकं कार्यत्वात् न° पु० पाठ. । २ °ष्वभिषङ्ग;° पु० पाठः ।

**प्रार्थना इच्छा** । सा द्वेधा–नित्यानित्यभेदेन । महेश्वरस्य नित्या ईशविशेषगुणत्वात् तद्बुद्धिवदिति । विप्रतिपन्नानि कार्याणि ईशेच्छाजन्यानि, कार्यत्वात् संप्रतिपन्नवदिति । सर्वोत्पत्तिनिमित्तत्वमीशेच्छायाः । अनित्या अनीशानाम् अनीशविशेषगुणत्वात् तद्बुद्धिवदिति ॥

रोषो **द्वेषः** । सोऽनित्यः जीवविशेषगुणत्वात्तद्बुद्धिवत् । अनित्यो द्वेधा–इच्छाद्वेषान्यतरपूर्वको जीवनपूर्वकश्चेति । पूर्वो मानसप्रत्यक्षसिद्धः । उत्तरोऽनुमानसिद्धः । सुषुप्तप्राणक्रिया अस्मदादिप्रयत्नजा प्राणक्रियात्वात् जाग्रतः प्राणक्रियावदिति ॥

आद्यपतनासमवायिकारणात्यन्तसजातीयं **गुरुत्वम्** । तत्र प्रमाणम्–प्रथमं पतनं असमवायिकारणपूर्वकं क्रियात्वात्संप्रतिपन्नवदिति । परिशेषाद्गुरुत्वसिद्धिः । द्रुतं सर्पिः यावद्द्रव्यभाव्यतीन्द्रियवत् चतुर्दशगुणवत्त्वात् बहुविशेषगुणवत्त्वाच्च आत्मवत् इति मानद्वयम् । तत्रान्यस्यासंभवात् । घटगुरुत्वं यावद्द्रव्यभावि अक्रियाजन्यत्वे सति अबुद्धिजन्यत्वे सति घटसमवेतत्वात् घटरूपवत् । सर्वत्र गुरुत्वं यावद्द्रव्यभावि गुरुत्वात् घटगुरुत्ववदिति साधनीयम् । अत एव कारणगुणपूर्वकत्वं तद्दृष्टान्तेन साधनीयम् । घटगुरुत्वमप्रत्यक्षं गुरुत्वात् परमाणुगुरुत्ववत् ॥

आद्यस्यन्दनासमवायिकारणात्यन्तसजातीयं **द्रवत्वम्** । तच्च द्वेधा–नित्यानित्यभेदात् । सलिलपरमाणुषु नित्यम् । तत्र प्रमाणम्–सलिलद्व्यणुकं यावद्द्रव्यभाविद्रवत्ववत् समवायिकारणकार्यं कार्यत्वे सति सलिलत्वात् संप्रतिपन्नसलिलवत् । पार्थिवतैजसपरमाणुषु द्रवत्वमनित्यम् असलिलद्रवत्वात् संप्रतिपन्नवदितीतरसिद्धिः । पार्थिवाः परमाणवो रूपादिचतुष्टयातिरिक्ताग्निसंयोगजैकद्रव्यगुणयोगिनः

अनित्यविशेषगुणवत्त्वे सति नित्यभूतत्वादाकाशवदिति परिशेषादग्निसंयोगजत्वं द्रवत्वस्य सिद्धम् । तेजःपरमाणुद्रवत्वं अग्निसंयोगजम्, उदकानधिकरणत्वे सति परमाणुद्रवत्वात् पार्थिवपरमाणुद्रवत्ववत् ॥

घनोपलगतबहिरिन्द्रियग्राह्यविशेषगुणात्यन्तसजातीयः **स्नेहः** । स च यावद्द्रव्यभावी, अम्भोविशेषगुणत्वाद्रूपवत् । परगतविशेषानपेक्षया पृथिव्यादीनामन्योन्यव्यवच्छेदको गुणो विशेषगुणः ॥

गुणत्वावान्तरजात्या वेगसजातीयः **संस्कारः** । स त्रेधा—वेगादिभेदेन । क्रियासमवायिकारणैकद्रव्यात्यन्तसजातीयो वेगः । वेगत्वं क्रियासमवायिकारणैकद्रव्यसमानाधिकरणं स्पर्शवज्जातित्वात् सत्तावदिति वेगसिद्धिः । स द्विविधः—वेगजः क्रियाजश्चेति । वेगत्व वेगासमवायिकारणवृत्ति वेगजातित्वात् सत्तावदिति वेगजवेगसिद्धिः । वेगत्वं कर्मासमवायिकारणवृत्ति वेगजातित्वात् सत्तावदिति कर्मजवेगसिद्धिः ॥

यावद्द्रव्यभाविसंस्कारः **स्थितिस्थापकः** । सुवर्णं यावद्द्रव्यभावि, अतीन्द्रियवत् घनावयवत्वात् सूचीवदिति तत्सिद्धिः ॥

संस्कारः पुरुषगुणो **भावना** । संस्कारत्वं पुरुषगुणवृत्ति, स्थितिस्थापकवेगजातित्वात सत्तावदिति भावनासिद्धिः ॥ (?)

अ न्द्रियः पुरुषैकवृत्तिः सुखहेतुर्**धर्मः** ॥

अतीन्द्रियः पुरुषैकवृत्तिर्दुःखहेतुर**धर्मः** । तत्र प्रमाणम्—विमतं मूर्तद्रव्यचलनं पुरुषगुणकारितं क्रियात्वात् कलेवरचलनवदिति ।

श्रोत्रैकग्राह्यजातिमान् **शब्दः** । सोऽनित्यः महाभूतविशेषगुणत्वात् पटरूपवदित्यनित्यत्वसिद्धिस्तस्य । शब्दो गुणः कर्मान्यत्वे सति सामान्यैकाश्रयत्वात् रूपवदिति नासिद्धो हेतुः । शब्दो नित्यः अपाकजनित्यभूतविशेषगुणत्वात् सलिलपरमाणुरूपवदित्यन्वयव्यतिरे-

किणा सत्प्रतिपक्षः इति चेत् । न । अस्य दूषणस्य वचनत्वाभावाद-पसिद्धान्तात् । किञ्च कोऽयं व्यतिरेकोऽस्य हेतोः । किं विपक्षे अ-भावोऽन्यो वा । नाद्यः अपसिद्धान्तप्रसङ्गात् । अन्यश्चेत् विविच्य वाच्यः । दृश्ये प्रतियोगिनि हेतौ स्मर्यमाणे विपक्षोपलम्भः, ततो व्यावृत्तिरिति चेत् । न । अनुभूयमाने तस्मिन्विपक्षे पश्यतोऽयं हेतुर्न स्यात् । ततोऽननुभूयमाने तस्मिन् विपक्षोपलम्भः, ततो व्या-वृत्तिरिति चेत् । न । प्रमेयत्वादीनां जनकत्वप्रसङ्गादनैकान्तिकत्वो-च्छेदप्रसङ्गादनुमितानुमानोच्छेदप्रसङ्गात् । न ततो व्यतिरेकासिद्धिः । विपक्षे हेतुविशेषणे च दूषणमिदमूह्यम् । तस्मात् पूर्वो हेतुरेव । श-ब्दस्य द्रव्यत्वसाधकं प्रमाणमप्रमाणम् । निरवयवेन्द्रियग्राह्यत्वं सा-क्षादिन्द्रियसंबन्धेन प्रतीयमानत्वं च व्यर्थविशेषणं मन्तव्यम् । स त्रिविधः सयोगजादिभेदात् । शब्दत्वं संयोगासमवायिकारणवृत्ति शब्दजातित्वात् सत्तावदिति संयोगजशब्दसिद्धिः । शब्दत्वं विभा-गासमवायिकारणवृत्ति शब्दजातित्वात्सत्तावदिति विभागजशब्द-सिद्धिः । शब्दत्वं गुणत्वावान्तरजात्या सजातीयारभ्यवृत्ति शब्दजा-तित्वात् सत्तावदिति शब्दजशब्दसिद्धिः ॥

इति तार्किकचक्रचूडामणिसर्वदेवसूरिविरचितायां
प्रमाणमञ्जर्यां गुणपदार्थः समाप्तः ॥

---

एकद्रव्यविभागासमवायिकारणसजातीयं कर्म । तत् प्रत्यक्षं प्रमेयत्वात् घटवदिति तस्य प्रत्यक्षत्वम् । घटकर्म अस्मदादिप्रत्यक्षं गुणान्यत्वे सति घटसमवेतत्वात् सत्तावदित्यस्मदादिप्रत्यक्षत्वम् । यत् सत् तत् क्षणिकम्, यथा जलधरः, सन्तश्चामी भावा इति क्षण-द्वयस्थित्यभावादारम्भकत्वानुपपत्तिः कर्मण इति चेत् । न । विक-ल्पानुपपत्तेः । तथाहि—क्षणे भवः क्षणिकः, तस्य भावः क्षणिक-

त्वम् । किं वा क्षणादूर्ध्वं न तिष्ठतीति क्षणिकः, तस्य भावः क्षणिकत्वम् । आद्ये कल्पे सिद्धसाधनम् । स्थायित्वपक्षेऽपि तत्संभवात् । न द्वितीयः व्यावृत्तावनैकान्तात् । अथ भावाद्भिन्ना व्यावृत्तिर्नास्तीति चेत् । न । व्यावृत्तावसत्यां स्वलक्षणानां क्षणिकत्वेन अविनाभावस्य अशक्यग्रहत्वादभ्युपगतस्य अनुमानस्यासंभवप्रसङ्गादपसिद्धान्तप्रसङ्गाच्च । तस्मात् सत्त्वं क्षणिकत्वे न साधनम् । स्थायित्वे प्रमाणम्—विप्रतिपन्नं कर्म स्वोत्पत्तिक्षणादन्यक्षणस्थं सत्त्वात् संप्रतिपन्नवदिति ॥

इति तार्किकभट्टकेसरिसर्वदेवसूरिविरचितायां
प्रमाणमञ्जर्यां कर्मपदार्थः समाप्तः ॥

---

नित्यमनुगतं **सामान्यम्** । तत्र प्रमाणं प्रत्यक्षम् । अथैतत्कल्पनाज्ञानमिति चेत् । न । कल्पनात्वस्य विकल्पानुपपत्तेः । तथाहि किं निर्विषयत्वं कल्पनात्वं किं वा शब्दसंपृक्तार्थप्रतिभासकत्वम् । आहोस्वित्स्मरणानन्तरभावित्वमिति । नाद्यः । इदमित्यबाधितधीविषयत्वात् । नापि द्वितीयः । अर्थे शब्दाभावात् । भावे चार्थस्य श्रोत्रपरिच्छेद्यत्वं स्यात् । शब्दस्य चाश्रोत्रेन्द्रियग्राह्यत्वं प्रसज्येत । न तृतीयः । इन्द्रियसंनिकर्षानुविधायिनो बाधस्य स्मृत्यनन्तरभावित्वेऽपि विरोधाभावात् । रूपस्मरणजननानन्तरमुपजातस्य रससाक्षात्कारस्याभ्युपगतप्रामाण्यस्याऽप्रामाण्यप्रसंगाच्च । सामान्यानभ्युपगमे लिङ्गलिङ्गिनोरविनाभावस्य दुर्ज्ञानत्वात् अनुमानस्यानुत्थानं न स्यात् । धूमधूमध्वजानामनन्तानामुपसंग्राहकाभावात् । अथ मतं वस्तुभूतं सामान्यं नास्ति । तथाप्यतद्व्यावृत्तेः सामान्यस्य विद्यमानत्वात् । तदुपसंग्राहकादनुमानं प्रवर्तत इति चेन्न । तद्व्यावृत्तेरवस्तुत्वादुपसंग्राहकाभावात् । तस्माद्वस्तुभूतं सामान्यमङ्गीकर्तव्यम् । तत्पर-

विवादमापन्नाः समवायप्रत्यया देवदत्तसमवायप्रत्ययेनाभिन्नविषयाः समवायप्रत्ययत्वात्सम्प्रतिपन्नसमवायप्रत्ययवदिति समवायैकत्वसिद्धिः ॥

इति तार्किकचूडामणिसर्वदेवसूरिविरचितायां
प्रमाणमञ्जर्यां समवायपदार्थः समाप्तः ॥

भावनिषेधोऽभावः। स द्वेधा—जन्योऽजन्यश्च। प्रथमः प्रध्वंसः। उत्तरो द्वेधा—विनाश्यन्यथा चेति। आद्यः प्रागभावः। उत्तरो द्वेधा—सामानाधिकरण्यनिषेधोऽन्यथा चेति। पूर्व इतरेतराभावः। उत्तरोऽत्यन्ताभावः। नात्र प्राभाकरं प्रति प्रमाणमभिधानीयम्। निद्रामरणनिर्वाणाङ्गीकरणात्। धिषणानिर्वाणं हि निद्रा। उपनिबन्धकादृष्टक्षयात् कलेवरवियोगो मरणम्। निखिलात्मविशेषगुणविलयो निर्वाणम्। अथ कथं दृश्ये प्रतियोगिनि ज्ञायमाने केवलाधिकरणोपलम्भ एव निद्रा इति चेत्। मैवमवोचः। विकल्पानुपपत्तेः। दृश्यस्य प्रतियोगिनो विज्ञानं किं सुप्तस्य किं वा यस्य कस्यचित्। आद्ये विकल्पे सुप्तः प्रतिबुद्धः स्यात्। न द्वितीयः। परतरवृत्तिसंवित्तेः परतरेण प्रत्यक्षेण ज्ञातुमशक्यत्वात्। परस्य यथाकथञ्चित् तत्र ज्ञानमस्तीति चेन्न। परमाणुगुणानां यथाकथञ्चिदवगतानां निषेधप्रसङ्गात् तस्मादभावोऽङ्गीकर्तव्यः। तत्र मोक्षे प्रमाणम्—आत्मा कदाचिदशेषविशेषगुणशून्यः। अनित्यविशेषगुणत्वात्पार्थिवपरमाणुवदिति नाकाशे व्यभिचारः। तस्यापि तथा साधनात् ॥

इति तार्किकचक्रचूडामणिसर्वदेवविरचितायां
प्रमाणमञ्जर्यामभावपदार्थः समाप्तः ॥

